सुधन्वा हि महाराजस्तदन्ये च नरेश्वराः।
धर्म्मपरम्परीमेतां पालयन्तु निरन्तरम्॥ 17 ॥

चातुर्वर्ण्यं यथायोग्यं वाङ्मनः कायकर्मभिः।
गुरोः पीठं समर्चेत विभागानुक्रमेण वै॥ 18 ॥

धरामालम्ब्य राजानः प्रजाभ्यः करभागिनः।
कृताधिकाराः आचार्या धर्मतस्तद्वदेव हि॥ 19 ॥

धर्मो मूलं मनुष्याणां, स चाचार्यावलम्बनः।
तस्मादाचार्यसुमणेः, शासनं सर्वतोधिकम्॥ 20 ॥

तस्मात् सर्वप्रयत्नेन शासनं सर्वसम्मतम्।
आचार्यस्य विशेषेण ह्यौदार्यभरभागिनः॥ 21 ॥

आचार्यक्षिप्तदण्डास्तु कृत्वा पापानि मानवाः।
निर्म्मला स्वर्गमायान्ति, सन्तः सुकृतिनो यथा॥ 22 ॥

इत्येवं मनुरप्याह गौतमोऽपि विशेषतः।
विशिष्टशिष्टाचारोऽपि, मूलादेव प्रसिद्ध्यति॥ 23 ॥

तानाचार्योपदेशांश्च राजदण्डांश्च पालयेत्।
तस्मादाचार्यराजानावनवद्यौ न निन्दयेत्॥ 24 ॥

धर्म्मस्य पद्धतिर्ह्येषा जगतः स्थितिहेतवे।
सर्वं वर्णाश्रमाणां हि यथाशास्त्रं विधीयते॥ 25 ॥

कृते विश्वगुरुर्ब्रह्मा त्रेतायामृषिसत्तमः।
द्वापरे व्यास एव स्यात्कलावत्र भवाम्यहम्॥ 26 ॥

॥ इतिमहानुशासनम् ॥





कालटी